श्रीगणेशायनमः ॥ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ श्रीकृ
ष्णायनमः ॥ श्रीमन्महागणाधिपतयेनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्यो
नमः ॥ स्थानदेवताभ्योनमः ॥ वास्तुदेवताभ्योनमः ॥ लक्ष्मीनारायणाभ्यांनमः ॥
उमामहेश्वराभ्यांनमः ॥ शचीपुरंदराभ्यांनमः ॥ मातापितृभ्यांनमः ॥ सर्वेभ्यो
देवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ एतत्कर्मप्रधानदेवताभ्योनमः ॥
अविघ्नमस्तु ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्नना
शोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियः
पठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्त
स्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोप
शांतये ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिन
मोस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलं ॥ येषांहृदिस्थोभगवान्मंगलाय
तनंहरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवल

मंगला.

॥ १ ॥

क्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवर
श्यामोहृदयस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतींप्र
णौम्यादौसर्वकार्यार्थसिद्धये ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः ॥ सर्ववि
घ्नहरस्तस्मैगणाधिपतयेनमः ॥ सर्वेष्वारब्धकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशं
तुनःसिद्धिंब्रह्मेशानजनार्दनाः ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमा
नस्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरेकलियु
गेप्रथमचरणेभरतवर्षेभरतखंडेजंबुद्वीपे दंडकारण्येदेशेगोदावर्याःदक्षिणेतीरे कृ
ष्णावेण्योःउत्तरेतीरेशालिवाहनशकेअस्मिन्वर्तमानेअमुकनामसंवत्सरेदक्षिणा
यनेवर्षाऋतौश्रावणमासेअमुकपक्षेअमुकतिथौभौमवासरेअमुकदिवसनक्षत्रेअ
मुकस्थितेचंद्रेअमुकस्थितेश्रीसूर्येअमुकस्थितेदेवगुरौ शेषेषुग्रहेषुयथायथाराशि
स्थानस्थितेषुसत्सुशुभनामयोगेशुभकरणएवंगुणविशेषणविशिष्टायां शुभपुण्य
तिथौममआत्मनःपुराणोक्तफलप्राप्त्यर्थंममपुत्रपौत्रादिवृद्ध्येअवैधव्यायुरादिसक

पूजा.

॥ १ ॥

लसिद्धिद्वारा श्रीशिवमंगलागौरीप्रीत्यर्थंयथाशक्तिसंपादितसामग्र्याध्यानावाह
नादिषोडशोपचारैःपूजनमहंकरिष्ये ॥ तदंगकलशघंटादीपपूजनंचकरिष्ये ॥
तत्रादौनिर्विघ्नतासिध्यर्थंमहागणपतिपूजनंचकरिष्ये ॥ वक्रतुंडमहाकायसूर्यको
टिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ अस्मिन्पूगीफलेऋद्धिबुद्धिसहि
तं महागणपतिंसांगंसपरिवारंसायुधंसशक्तिकंआवाहयामि ॥ महागणपतयेनमः
ध्यानार्थेध्यानंसमर्पयामि ॥ महागणपतयेनमःआसनार्थेअक्षतान्इत्यादिषोड
शोपचारैःसंपूज्य ॥ नमस्करोमि ॥ अनेनपूजनेनविघ्नहर्तामहागणपतिःप्रीयतां ॥
कलस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृ
ताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्व
णः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टि
करीतथा ॥ आयांतुदेवपूजार्थंदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवगोदावरिस
रस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ अस्मिन्कलशेवरुणंसांगंसप

रिवारंसायुधंसशक्तिकंआवाहयामि ॥ कलशदेवताभ्योनमःसर्वोपचारार्थेगंधाक्ष
तपुष्पंस० ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसां ॥ कुर्वेघंटारवंतत्रदेवताह्वान
लक्षणं ॥ घंटायैनमःसर्वोपचारार्थेगंधाक्षत० ॥ अपवित्रःपवित्रोवासर्वावस्थांग
तोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरंशुचिः ॥ कलशोदकेनआत्मानंप्रो
क्ष्य पूजाद्रव्याणिचप्रोक्षेत् ॥ भोदीपब्रह्मरूपस्त्वंज्योतिषांप्रभुरव्ययः ॥ आरोग्यं
पुत्रपौत्रादिसर्वकामांश्चदेहिमे ॥ दीपदेवताभ्योनमःसर्वोपचारार्थेगंधाक्षतपुष्पं
स० ॥ ( अत्रपूजारंभेकचिद्देवीपश्चिमतःकलशोपरिदीपंप्रज्वालयंतिकचित्केवल
मेवदीपंकचिद्देव्यधोहरिद्रापिष्टादिनिर्मितालंकारजातंस्थापयंतिकचिद्देव्यासहषो
डशग्रंथिकंदोरकंपूजयंतीत्याचारः ) ॥ अथध्यानं ॥ कुंकुमापरिलिप्तांगांसर्वाभ
रणभूषितां ॥ नीलकंठप्रियांगौरींवंदेहंमंगलाह्वयां ॥ श्रीशिवमंगलागौरीभ्यांन
मःध्यानंसमर्पयामि ॥ अत्रागच्छमहादेविसर्वलोकसुखप्रदे ॥ यावद्व्रतमहंकुर्वेपु
त्रपौत्राभिवृद्धये ॥ श्रीशिवमंगलागौरीभ्यांनमःआवाहनंसम० ॥ रौप्येणचासनं

दिव्यंरत्नमाणिक्यशोभितं॥मयानीतंगृहाणत्वंगौरिकामारिवल्लभे॥ श्रीशिवमंग
लागौरीभ्यांनमःआसनंसम० ॥ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं ॥ तोयमे
तत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां ॥ श्रीशिवमंगलागौरीभ्यांनमःपाद्यंस० ॥ गंधपु
ष्पाक्षतैर्युक्तमर्घ्यंसंपादितंमया ॥ गृहाणमंगलेगौरिप्रसन्नाभवसर्वदा ॥ श्रीशिव
मंगलागौरीभ्यांनमःअर्घ्यंस० ॥ कामारिवल्लभेदेविकुर्वाचमनमंबिके ॥ निरंतर
महंवंदेचरणौतवपार्वति ॥ श्रीशिवमंगलागौरीभ्यांनमःआचमनीयं ॥ जाह्नवी
तोयमानीतंजलंकर्पूरसंयुतं ॥ स्नापयामिसुरश्रेष्ठेत्वांपुत्रादिफलप्रदां ॥ श्रीशि
वमंगलागौरीभ्यांनमःस्नानंस० ॥ अथपंचामृतस्नानं ॥ सौरभेय्यामहद्दिव्यंपवि
त्रंपुष्टिवर्धनं ॥ स्नानार्थंतेमयादत्तंदुग्धंगृह्णनमोस्तुते ॥ श्रीशिवमंगला० पयःस्ना
नंस० ॥ पयःस्नानांतेशुद्धोदकस्नानंस० ॥ सकलपूजार्थेअक्षतान्समर्पयामि ॥
चंद्रमंडलसंकाशंसर्वदेवप्रियंदधि ॥ स्नानार्थंतेप्रयच्छामिप्रीताभवसुरेश्वरि ॥
श्रीशिवमंगलागौरीभ्यां० दधिस्नानंस० ॥ सकलपूजार्थेअक्षतान्स०॥ घृतकुंभस

मायुक्तेघृतयोनेघृतप्रिये ॥ घृतभुग्घृतधामासिघृतंस्नानायगृह्यतां ॥ श्रीशिव मंगला०घृतस्नानंस० ॥ सकलपूजार्थेअक्षतान्स० ॥ सर्वौषधिसमुत्पन्नंपीयूषस दृशंमधु ॥ स्नानार्थंतेमयादत्तंगृहाणपरमेश्वरि ॥ श्रीशिवमंगला० मधुस्नानंस० ॥ सकलपूजार्थेअक्षतान्स० ॥ इक्षुदंडसमुत्पन्नारस्यास्निग्धतराशुभा ॥ शर्करेयंम यादत्तास्नानार्थंप्रतिगृह्यतां ॥ श्रीशिवमंगला० शर्करास्नानंस० ॥ सकलपूजार्थे अक्षतान्स० ॥ षष्ठंगंधोदकस्नानंसम० ॥ मलयाचलसंभूतंचंदनागरुवासितं ॥ तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां ॥ श्रीशिवमंगला० चंदनोदकस्नानंस० ॥ श्रीशिवमंगलागौरीभ्यांनमःवस्त्रोपवस्त्रार्थेअक्षतान्सम०॥विलेपनार्थेचंदनंस० ॥ अलंकारार्थेअक्षतान्स० ॥ पूजार्थेपुष्पंस० ॥ श्रीशिवमं० धूपंस० ॥ दीपंस०॥ श्रीशिवमंगलागौरीभ्यांनमःनैवेद्यंसमर्पयामि ॥ प्राणायनमःअपानायनमःव्या नायनमःउदानायनमःसमानायनमःब्रह्मणेनमः ॥ मध्येपानीयंसमर्पयामि ॥ प्राणापानव्यानोदानसमानाःब्रह्मणेनमः ॥ हस्तप्रक्षालनंमुखप्रक्षालनंचसम० ॥

मुखवासार्थेंपूगीफलतांबूलंसम० ॥ सुवर्णपुष्पदक्षिणांसमर्पयामि ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ मंत्रपुष्पंसमर्पयामि ॥ नमस्करोमि ॥ अनेनपूर्वाराधनेनश्रीशिवमंगलागौरीप्रीयेतां ॥ उत्तरेनिर्माल्यंविसृजेत् ॥ अथमहाभिषेकस्नानं ॥ महिम्नःपारंतेपरम० श्रीशिवमंगलागौरीभ्यांनमःमहाभिषेकस्नानंसमर्प० ॥ महाभिषेकस्नानांतेआचमनीयंस० ॥ वस्त्रंचसोमदैवत्यंलज्जायास्तुनिवारणं ॥ मयानिवेदितंभक्त्यागृहाणपरमेश्वरि ॥ श्रीशिवमंगलागौरीभ्यांनमः ॥ कार्पासवस्त्रंसमर्पयामि ॥ नवरत्नादिभिर्बद्धांसौवर्णेनचतंतुभिः ॥ निर्मितांकंचुकींभक्त्यागृहाणपरमेश्वरि ॥ श्रीशिवमंगला० कंचुकींसमर्पयामि ॥ कुंकुमागरुकर्पूरकस्तूरीचंदनंतथा ॥ विलेपनंमहादेविगंधंदास्यामिभक्तितः ॥ श्रीशिवमंगला० विलेपनार्थेचंदनंस० ॥ रंजिताःकुंकुमाद्येनअक्षताश्चापिशोभनाः ॥ ममैषांदेविदानेनप्रसन्नाभवपार्वति ॥ श्रीशिवमंगला० अक्षतान्स० ॥ पट्टसूत्रभवंदिव्यंस्वर्णपूर्णाकृतीयुतं ॥ सौमंग

ल्याभिवृद्ध्यर्थंकंठसूत्रंददामिते ॥ कंठसूत्रंसम० ॥ ताडपत्राणिदिव्यानिविचित्राणिशुभानिच ॥ कराभरणयोग्यानिगौरित्वंप्रतिगृह्यतां ॥ श्रीशिवमंगला० ताडपत्रंस० ॥ हरिद्रारंजितादेव्याःसुखसौभाग्यसंपदा ॥ अतस्त्वांपूजयिष्यामिगृहाणपरमेश्वरि ॥ श्रीशिवमंगलागौरीभ्यांनमःहरिद्रांसमर्पयामि ॥ कुंकुमंकामदंदिव्यंकामिनीकामसंभवं ॥ कुंकुमेनार्चितेदेविसौभाग्यंप्रतिगृह्यतां ॥ श्रीशि-वमंगलागौरीभ्यांनमःकुंकुमंसमर्पयामि ॥ सुनीलभ्रमराभासंकज्जलंनेत्रमंडनं ॥ मयादत्तमिदंभक्त्याकज्जलंप्रतिगृह्यतां ॥ श्रीशिवमंगला० कज्जलंस० ॥ विद्युदरुणसंकाशंजपाकुसुमसन्निभं ॥ सिंदूरंतेप्रदास्यामिसौभाग्यंदेहिमेचिरं ॥ श्रीशिवमंगला० सिंदूरंस० ॥ नानासुगंधिकंद्रव्यंचूर्णीकृत्वाप्रयत्नतः ॥ ददामितेनमस्तुभ्यंप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीशिवमंगलागौरीभ्यांनमः ॥ नानापरिमलद्रव्यंसमर्पयामि ॥ वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं ॥ पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां ॥ श्रीशिवमंगला० भूषणादिस० ॥ माल्यादीनिसुगंधीनिमालत्या

दीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ करवीरैर्जातिकुसुमैश्चं
पकैर्बकुलैःशुभैः ॥ शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वरि ॥ सेवंतिकाबकुलचंपकपाट
लाब्जैःपुन्नागजातिकरवीररसालपुष्पैः ॥ बिल्वप्रवालतुलसीदलमालतीभिस्त्वां
पूजयामिजगदीश्वरिमेप्रसीद ॥ श्रीशिवमंगलागौरी० नानाविधपुष्पाणिसमर्प
यामि ॥ ॥ अथांगपूजा ॥ उमायैनमःपादौपूजयामि ॥ गौर्यैनमःजंघेपूज
यामि ॥ पार्वत्यैनमःजानुनीपूजयामि ॥ जगद्धात्र्यैनमःऊरूपूजयामि ॥ जग
त्प्रतिष्ठायैनमःकटिंपूजयामि ॥ शांतिरूपिण्यैनमःललाटंपूजयामि ॥ मंगलदा
त्र्यैनमःशिरःपूजयामि ॥ पुत्रदायिन्यैनमःसर्वांगंपूजयामि ॥ अथपत्रपूजा ॥
अपामार्गस्यपत्रैश्चदूर्वाधत्तूरसंज्ञकैः ॥ दूर्वाषोडशसंख्याकैर्बिल्वपत्राणिपंचच ॥
गौर्यैनमःमालतीपत्रंस० (मोगरीचेंपान) ॥पार्वत्यैनमः भृंगिराजपत्रं० (माक्याचें
पान) ॥ जगद्धात्र्यैनमःबिल्वपत्रं ( बेलाचेंपान ) ॥ जगत्प्रभायैनमःबदरीपत्रं०
(बोरीचेंपान) ॥ शांतिरूपिण्यैनमःधत्तूरपत्रं ( धोत्र्याचेंपान ) स० ॥ देव्यैनमः

तुलसीपत्रं ( तुलसीचेंपान ) ॥ लोकवंद्यायैनमः शमीपत्रं ( शमीचेंपान ) ॥ कात्यैनमःअपामार्गपत्रं ( आघाड्याचेंपान ) ॥ शिवायैनमःबृहतीपत्रं (डोरलीचेंपान ) ॥ भवान्यैनमःकरवीरपत्रं ( कण्हेरीचेंपान ) सम० ॥ रुद्रायैनमः अर्कपत्रं ( रुईचेंपान ) ॥ शर्वाण्यै० ( अर्जुनपत्रं ) सम० ॥ मंगलागौर्यैनमः विष्णुक्रांतपत्रं समर्पयामि ॥ मंगलदात्र्यैनमःनानाविधपत्राणिसमर्पयामि ॥ नमःशिवायै इतितिलतंदुलजीरकादिनानाविधधान्यमुष्टिंसमर्प्य ॥ बिल्वपत्राणिसमर्पयेत् ॥ देवद्रुमरसोद्भूतःकृष्णागरुसमन्वितः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां ॥ श्रीशिवमंगला०धूपंस० ॥ त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमं ॥ आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यतां ॥ श्रीशिवमंगला०दीपंस० ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां ॥ श्रीशिवमंगला०अमुकनैवेद्यंसमर्पयामि ॥ प्राणायनमः ॥ अपानायनमः ॥ व्यानायनमः ॥ उदानायनमः ॥ समानायनमः ॥ ब्रह्मणेनमः ॥ नमस्तेदेवदेवेशि

सर्वतृप्तिकरंपरं ॥ मयानिवेदितंतुभ्यंगृहाणजलमुत्तमं ॥ श्रीशिवमंगलागौरी
भ्यांनमःमध्येपानीयंसमर्पयामि ॥ प्राणापानव्यानोदानसमानःब्रह्मणेनमः ॥
उत्तरापोशनंसमर्पयामि ॥ हस्तप्रक्षालनंस० ॥ मुखप्रक्षालनंस० ॥ करोद्वर्तनार्थे
चंदनंस० ॥ पूगीफलंमहद्दिव्यंनागवल्ल्यादलैर्युतं ॥ कर्पूरैलासमायुक्तंतांबूलं
प्रतिगृह्यतां ॥ श्रीशिवमंगला० मुखवासार्थेतांबूलंस० ॥ इदंफलंमयादेविस्था
पितंपुरतस्तव ॥ तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ श्रीशिवमंगला०
अमुकफलंस० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतः
शांतिंप्रयच्छमे ॥ श्रीशिवमंगला० सुवर्णपुष्पदक्षिणांस० ॥चंद्रादित्यौचधरणिर्वि
द्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यतां ॥ श्रीशिवमंगलागौ
रीभ्यांनमःमहानीराजनदीपंसमर्पयामि ॥ कर्पूरगौरंकरुणावतारंसंसारसारंभुज
गेंद्रहारं ॥ सदावसंतंहृदयारविंदेभवंभवानीसहितंनमामि ॥ श्रीशिवमंगला०
कर्पूरार्तिक्यदीपंस० ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रा

यैनियताःप्रणतास्मतां ॥ श्रीशिवमंगला० मंत्रपुष्पंसमर्पयामि ॥ यानिकानि
चपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंतिप्रदक्षिणपदेपदे ॥ प्रद
क्षिणात्रयंचैवकरिष्यामिपदेपदे ॥ पापघ्नंतवदेवेशिदुःखंमेहरसुव्रते ॥ श्रीशिवमं
गलागौरीभ्यांनमःप्रदक्षिणांसमर्पयामि ॥ साष्टांगोयंप्रणामस्तेनमस्कृत्ययथावि
धि ॥ त्वद्दासइतिमांभक्त्याप्रसीदपरमेश्वरि ॥ अन्यथाशरणंनास्तित्वमेवशरणं
मम ॥ तस्मात्कारुण्यभावेनरक्षस्वपरमेश्वरि ॥ श्रीशिवमंगलागौरी० नमस्कारं
सम० ॥ गीतंनृत्यंवाद्यंछत्रंचामरंव्यजनंसर्वराजोपचारान्कल्पयेत् ॥ आवाहनं
नजानामिनजानामिविसर्जनं ॥ पूजांचैवनजानामिक्षम्यतांपरमेश्वरि ॥ अ
न्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षस्वपरमेश्वरि ॥ गतं
पापंगतंदुःखंगतंदारिद्र्यमेवच ॥ आगतासुखसंपत्तिःपुण्याच्चतवदर्शनात् ॥ मं
त्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि ॥ यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे ॥
पुत्रान्देहिधनंदेहिसौभाग्यंदेहिमंगले॥अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते ॥

श्रीशिवमंगलागौरीभ्यानमःप्रार्थनासमर्पयामि ॥ अनेनयथाज्ञानेनयथामीलि
तोपचारद्रव्यैःकृतपूजनेनश्रीशिवमंगलागौरीप्रीयतां ॥ ॥ अद्यपूर्वोच्चरितवर्तमा
नएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ ममआत्मनःपुराणोक्तफलप्राप्त्यर्थंक
ल्पोक्तफलावाप्तयेब्राह्मणायवायनदानमहंकरिष्ये ॥ ब्राह्मणपूजनंचकरिष्ये ॥ महा
विष्णुस्वरूपिणेब्राह्मणायइदमासनं ॥ स्वासनं ॥ इदंपाद्यं ॥ सुपाद्यं ॥ इदमर्घ्यं ॥
अस्त्वर्घ्यं ॥ इदमाचमनीयं ॥ अस्त्वाचमनीयं ॥ गंधाःपांतु ॥ सौमंगल्यंचा
स्तु ॥ अक्षताःपांतु ॥ आयुष्यमस्तु ॥ पुष्पाणिपांतु ॥ सौश्रेयमस्तु ॥ तांबूलं
पातु ॥ ऐश्वर्यमस्तु ॥ दक्षिणाःपांतु ॥ बहुदेयंचास्तु ॥ नमोस्त्वनंतायसह
स्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधा
रिणेनमः ॥ उपायनमिदंदेविव्रतसंपूर्तिहेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददा
म्यहं ॥ इदंषोडशमोदकभृतंवायनदानंसदक्षिणाकंसतांबूलंअमुकशर्मणेब्राह्मणाय
तुभ्यमहंसंप्रददे ॥ प्रतिगृह्यतांप्रतिगृह्णामि ॥ तेनश्रीशिवमंगलागौरीप्रीयतां ॥ ध्व ॥

श्रीगणेशाय नमः ॥ ॥ युधिष्ठिर प्रश्न करतात कीं, हे नंदनंदना गोविंदा, आजपर्यंत आपणाकडून मी बहुत कथा ऐकल्या. आतां पुत्र व आयुष्य देणारें व्रत श्रवण करण्यासाठीं माझें मन अत्यंत उत्कंठित झालें आहे ॥ १ ॥ हा प्रश्न ऐकून श्रीकृष्ण सांगतात, हे शत्रुनाशका धर्मा, अवैधव्यकारक व्रताची फार चित्तवेधक अशी पुरातन कथा तुला सांगतों;

श्रीगणेशाय नमः ॥ ॥ युधिष्ठिर उवाच ॥ नंदनंदन गोविंद भवतो बहुलाः कथाः ॥ श्रुता उत्कंठि पुत्रायुःकरं श्रोतुं मनो व्रतम् ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ अवैधव्यकरं वक्ष्ये व्रतं चारिनिषूदन ॥ शृणु त्वं सावधानः सन् कथां वक्ष्ये पुरातनीम् ॥ २ ॥ कुंडिनं नाम नगरं ख्यातस्तत्र द्विजप्रियः ॥ आसीद्वणिग्धर्मपालो नाम्ना बहुधनोऽपि सः ॥ ३ ॥

तूं सावधान होऊन ऐक ॥ २ ॥ पूर्वीं कुंडिन नांवाचें नगर असून तेथें ब्राह्मणांवर अत्यंत प्रीति करणारा धर्मपाल या नांवानें प्रसिद्ध असा एक वैश्य राहत होता व तो मोठा धनवान् होता ॥ ३ ॥

तो सपत्नीक असून पुत्रसंतानरहित असल्यामुळें आपणास पुत्र नाहीं त्यायोगानें निरंतर अंतःकरणांत व्याकुल असे. त्याच्या घरीं भस्माचें उद्धूलन केलेला व रुद्राक्षांच्या माळा धारण केलेला ॥ ४ ॥ असा जटाधारी भिक्षुक ( बैरागी ) नित्य येत असे. या बैराग्याचें दर्शन सर्वांला अत्यंत प्रिय असे. तो कधींही धर्मपालाचें अन्न स्वीकारीत

सपत्नीको ह्यपुत्रोऽसौ नास्तीति व्याकुलो हृदि ॥ तस्य गेहे भस्मलिप्तो देहे रुद्राक्षधारकः ॥४॥ जटिलो भिक्षुको नित्यमागच्छन् प्रियदर्शनः॥ न स्वीकुर्वंस्तदन्नं स इति दृष्ट्वाऽबलावदत् ॥ ५ ॥ स्वामिन्नयं सदा याति भिक्षुको जटिलो गृहे ॥ न स्वीकरोत्यस्मदन्नमिति दृष्ट्वा ममाधिकम् ॥ दुःखं प्रजायते नित्यं श्रुत्वा भार्या वचोऽब्रवीत् ॥ ६ ॥

नसे. तें पाहून त्याची स्त्री पतीला ह्मणते ॥ ५ ॥ अहो स्वामिन्, एक जटाधारी भिक्षुक नित्य आपले घरीं येतो, परंतु आमचे घरचें अन्न घेत नाहीं, त्यामुळें मला निरंतर अतिशय दुःख होतें. हें तिचें ह्मणणें ऐकून धर्मपाल भार्येला ह्मणाला ॥ ६ ॥

धर्मपाल ह्मणतो, हे प्रिये, तूं एके दिवशीं हातात सुवर्ण घेऊन अंगणात गुप्तरूपानें उभी राहा. आणि तो ज्या वेळीं भिक्षेसाठीं येतो त्या वेळीं हे निष्पापे प्रिये, तूं त्या बैराग्याच्या पदरांत सुवर्णादि द्रव्य टाक ॥ ७ ॥ हें ऐकून धर्मपालाच्या भार्येनें पतीच्या आज्ञेप्रमाणें केलें. त्यावेळीं त्या जटाधारी भिक्षूनें तिला असा शाप दिला कीं, तुला अपत्य होणार

धर्मपाल उवाच ॥ प्रिये कदाचिद्गुप्ता त्वं ससुवर्णाऽगणे भव ॥ यदा भिक्षार्थमायाति भिक्षोर्वस्त्रांतरे त्वया ॥ तदा तस्य प्रदेयानि सुवर्णानि प्रियेऽनघे ॥७॥ अनंतरं तस्य भार्याऽचीकरत्स्वामिनोदितम् ॥ जटिलेन तु सा शप्ताऽपत्यं ते न भविष्यति ॥८॥ श्रुत्वा भिक्षोरिदं वाक्यं दुःखिता तमुवाच ह ॥ स्वामिन् शप्ता त्वया पापाच्छापादुद्धर संप्रति ॥ ९ ॥

नाहीं ॥ ८ ॥ हें त्याचें शापयुक्त भाषण ऐकून ती अत्यंत दुःखित होत्साती त्या भिक्षूला ह्मणाली; अहो स्वामिन्, आपण मला अपराधामुळें शाप दिला खरा, परंतु आतां कृपा करून त्या शापापासून माझा उद्धार करावा ॥ ९ ॥

अशी प्रार्थना करून ती दीन भाषण करणारी धर्मपालाची भार्या त्याच्या पायांवर पडली, तेव्हां तो जटिल ह्मणाला, हे मुली, तूं माझ्या आज्ञेनें आपल्या पतीजवळ बोलावेंस कीं ॥ १० ॥ तुह्मी काळीं वस्त्रें परिधान करून काळया घोड्यावर बसून अरण्यांत जावें आणि जेथें आपला घोडा अडखळेल तेथें खणावें ॥ ११ ॥ ह्मणजे तेथें अत्यंत रमणीय, सभोंवतीं

इत्युक्त्वा तस्य चरणौ ववंदे दीनभाषिणी ॥ जटिल उवाच ॥ भर्तुः समीपे वक्तव्यं त्वया पुत्रि ममाज्ञया ॥१०॥ नीलवस्त्रः समारुह्य नीलाश्वं गच्छ काननम् ॥ खननं तत्र कर्तव्यं यत्राश्वस्ते स्खलिष्यति ॥ ११ ॥ रम्यं पक्षिभिरायुक्तं मृगसंघद्रुमाकुलम् ॥ सुवर्णरचितं रत्नमाणिक्यादि-विभूषितम् ॥१२॥ नानापुष्पैः समायुक्तं दृश्यं देवालयं ततः ॥ वर्तते तत्र भवती भवानी भक्तवत्सला ॥ १३ ॥ ॥

पक्ष्यांनीं युक्त, मृगसमुदायानें व पक्ष्यांनीं व्याप्त, सुवर्णानें बांधलेलें, रत्नें व माणकें इत्या-दिकांनीं अत्यंत शोभायमान ॥ १२ ॥ अनेक प्रकारच्या पुष्पांनीं युक्त असें देवालय दृष्टि-गोचर होईल. त्या मंदिरांत भक्तांवर प्रेम करणारी पूज्य जगदंबा भवानी आहे ॥ १३ ॥

तिचें अंतःकरणपूर्वक यथाविधि आराधन कर ह्मणजे ती भवानी तुला उद्धरील. हें भिक्षूचें सुखदायक भाषण ऐकून ॥ १४ ॥ त्याचे चरण वारंवार वंदून त्याविषयीं प्रार्थना करूं लागली. पण तो जटिल तत्काल गुप्त झाला ॥ १५ ॥ तेव्हां ती पतीला ह्मणाली, अहो प्राण-

आराधय त्वं मनसा यथाविध्युद्धरिष्यति ॥ त्वां भवानीति वचनं श्रुत्वा भिक्षोः सुखप्रदम् ॥ १४ ॥ ववंदे तस्य चरणौ पुनः पुनरुवाचह ॥ तदैव काले जटिलोऽप्यंतर्भूतो बभूव सः ॥ १५ ॥ साऽवदत्पतिमत्रैहि शृणु भिक्षूक्तमादरात् ॥ यथोक्तमवदद्भर्ता तच्छ्रुत्वा वाक्यमब्रवीत् ॥ १६ ॥ ॥ ॥ ॥

नाथ, जरा इकडे या आणि त्या भिक्षूनें केलेलें भाषण आदरपूर्वक श्रवण करा. असें ह्मणतांच पति जवळ आला तेव्हां तिनें त्यास तो भिक्षु जसें बोलला होता, त्याप्रमाणें सर्व सांगितलें. तें ऐकून तो तिचा पति धर्मपाल बरें आहे असें ह्मणाला ॥ १६ ॥

आणि निळीं वस्त्रें परिधान करून निळ्या घोड्यावर बसून वनांत गेला; तो जातांना मार्गांत अनेक प्रकारचे वृक्ष वगैरे पाहून भयानें व्याकुल झाला ॥ १७ ॥ तसेच नानाप्रकारचे हिंस्र पशु, सिंह व सर्प यांस मार्गांत पाहून भयभीत झाला. पुढें अनेक प्रकारें शोभायमान असें सरोवर त्यानें पाहिलें ॥ १८ ॥ तें असें कीं, आरक्तवर्ण व कृष्णवर्ण अशा

नीलवस्त्रः समारुह्य नीलाश्वं प्रस्थितो वनं ॥ गच्छन्नानाविधान्वृक्षान् पथि पश्यन् भयाकुलः॥१७॥ मृगान्सिंहान् दंदशूकान् पथि पश्यन् भयाकुलः॥ ददर्शासौ तडागं च बाहुल्येन विराजितम् ॥१८॥ रक्तनीलोत्पलैश्चक्रवाकद्वंद्वैश्च राजितम्॥स्नानं चकार तत्रासौ तर्पणाद्यपि भूरिशः॥१९॥ पुनरश्वं समारुह्य जगाम गहनं वनम्॥स्खलितं वाजिनं पश्यन्नश्वादुत्तीर्य तत्क्षणम्२०

कमलांनीं व चक्रवाक पक्ष्यांच्या जोडप्यांनीं शोभणारें फार रमणीय होतें. त्या सरोवरांत धर्मपालानें स्नान करून बहुधा पितृतर्पणादि कर्मही केलें ॥ १९ ॥ आणि पुनः तो अश्वावर बसून गहन अरण्यांत गेला. आणि ज्या ठिकाणीं घोडा अडखळलेला पाहिला तेथें तो तत्क्षणीं अश्वावरून खालीं उतरून ॥ २० ॥

त्या जागीं देवालय लागे तोंपर्यंत भूमि खणूं लागला, व खणतां खणतां तेथें मोठें विशाल देवालय त्यानें पाहिलें ॥ २१ ॥ तें असें कीं, रत्नें, मौक्तिकें व माणकें यांनीं सर्वत्र व्याप्त असें तें देवालय पाहून भिक्षूचें पूर्ववाक्य स्मरून अत्यंत विस्मय पावला ॥ २२ ॥ नंतर भरजरी वस्त्रें, अनेक प्रकारचीं चंदनें, उत्तम अक्षता, चंपकादि पुष्पें, विशेषेंकरून धूप,

चखान पृथिवीं तत्र यावद्देवालयं गतः ॥ ददर्श च महास्थूलं देवालयमसौ ततः ॥२१॥ रत्नैर्मुक्ताफलैश्चैव माणिक्यैश्चापि सर्वतः ॥ पूजयामास जटिलं वाक्यं स्मृत्वातिविस्मितः ॥ २२ ॥ सुवर्णयुक्तवस्त्राणि चंदनान्यक्षतान्शुभान् ॥ चंपकादीनि पुष्पाणि धूपदीपं विशेषतः ॥ २३ ॥ नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितम् ॥ नानाशाकैः समाक्रांतं सदुग्धघृतशर्करम् ॥ २४ ॥ ॥ ॥

दीप ॥ २३ ॥ तसाच अनेक पक्वान्नांनीं व उत्तम प्रकारें षड्रसांनीं संपन्न; नानाप्रकारच्या भाज्या व चटण्या कोशिंबिरी यांनीं आसमंतात् व्याप्त; दूध, तूप, साखर इत्यादिकांनीं सहित ॥ २४ ॥

असा नैवेद्य आणि हस्तप्रक्षालनार्थ मलयाचलावर उत्पन्न झालेलें चंदन, नानाप्रकारचीं फळें, तांबूल व दक्षिणा अशी सर्व पूजासामग्री तयार करून मनांत संतोष पावला ॥ २५ ॥ आणि देवीच्या सगुण स्वरूपाचें ध्यान मनांत आणून तो गुप्तरीतीनें एका बाजूस बसून देवीमंत्राचा जप करूं लागला. तों देवी भक्ताच्या गृहांतून येऊन ती मोठ्या आदरानें

नैवेद्यं करशुद्ध्यर्थं चंदनं मलयाद्रिजम् ॥ संपाद्य तुष्टहृदयः फलतांबूल दक्षिणाः ॥ २५ ॥ जजाप मंत्रान् गुप्तोऽसौ सगुणध्यानपूर्वकम् ॥ देवी भक्तगृहादेत्य लोभयामास सादरम् ॥ २६ ॥ प्रसन्नावददत्रेयं पूजा संपादिता कथम् ॥ येन संपादिता तस्मै ददामि वरमद्भुतम् ॥ २७ ॥

पूजा पाहतांच त्या पूजेचा स्वीकार करण्याविषयीं लुब्ध झाली ॥ २६ ॥ आणि प्रसन्न होऊन ह्मणाली कीं, या असल्या अगम्य स्थळीं ही पूजा संपादन झाली तरी कशी? ज्यानें ही पूजा सिद्ध केली असेल त्याला मी अद्भुत वर देईन ॥ २७ ॥

हें जगदंबेचें भाषण श्रवण करतांच तो धर्मपाल देवीच्या अग्रभागीं हात जोडून उभा राहिला, त्या वेळीं ती भगवती देवी ह्मणाली कीं, हे निष्पापा धर्मपाला, तूं सर्वोत्कृष्ट माझी पूजा संपादन केलीस ॥ २८ ॥ हे माझ्या भक्ता, वर माग. मी तुला पुष्कळ धन देतें. धर्मपाल ह्मणाला, हे जगज्जननि, तुझ्या कृपाप्रसादानें मला बहुत धनसंपत्ति आहे ॥ २९ ॥

इति श्रुत्वा धर्मपालो देव्यग्रे प्रांजलिः स्थितः ॥ ॥ भगवत्युवाच ॥
धर्मपाल त्वया सम्यक् पूजा संपादितानघ ॥ २८ ॥ वरं याचय मद्भक्त
ददामि बहुलं धनम् ॥ ॥ धर्मपाल उवाच ॥ बहुला धनसंपत्तिर्वर्तते
त्वत्प्रसादतः ॥ २९ ॥ अपत्यं प्राप्तुमिच्छामि पितॄणां तारकं शुभम् ॥
आयाति भिक्षुको गेहे गृह्णाति न मदन्नकम् ॥ ३० ॥ ॥

आतां मी केवळ पितरांला तारणारें असें उत्तम अपत्य प्राप्त व्हावें असें इच्छितों. माझ्या घरीं नित्य पुष्कळ भिक्षुक येतात परंतु मी पुत्ररहित असल्यामुळें ते माझें अन्न ग्रहण करीत नाहींत ॥ ३० ॥

तेणेंकरून भार्येसहवर्तमान निरंतर मला फार दुःख होतें. असें धर्मपालाचें दीन भाषण श्रवण करून देवी ह्मणते ॥ ३१ ॥ हे धर्मपालका, तुझ्या नशिबांत सुखदायक अपत्य नाहीं. परंतु तुझें मागणें तरी काय, वैधव्य प्राप्त होणारी कन्या मागतोस काय ? ॥ ३२ ॥ अथवा

तेन मे बहुलं दुःखं सभार्यस्योपजायते ॥ इति दीनवचः श्रुत्वा देवी वचनमब्रवीत् ॥ ३१ ॥ ॥ देव्युवाच ॥ धर्मपालक तेऽदृष्टेऽपत्यं नास्ति सुखप्रदम् ॥ तथापि किं याचयसि कन्यां विगतभर्तृकाम् ॥ ३२ ॥ पुत्रमल्पायुषं वाथाप्यंधं दीर्घायुषं सुतम् ॥ ॥ धर्मपाल उवाच ॥ पुत्रमल्पायुषं देहि तावता कृतकृत्यताम् ॥ ३३ ॥ ॥

अल्पायुषी पुत्र ? अथवा दीर्घायु असून अंध असा पुत्र झाला तरी चालेल ? हें ऐकून धर्मपाल ह्मणाला, हे मातः, चांगला शहाणा असा अल्पायुषी पुत्र दे ह्मणजे मी तेवढ्यानेंच कृतकृत्यता पावेन ॥ ३३ ॥

आणि माझे पितर घोर नरकात जात आहेत त्यांस उद्धरीन. हें त्याचें भाषण ऐकून देवी ह्मणाली कीं, माझ्या पार्श्वभागीं असणाऱ्या गणपतीच्या नाभीवर चढून ॥ ३४ ॥ त्या गणपतीच्या बाजूस आंब्याच्या वृक्षाचें अद्भुत फळ घेऊन तें तूं आपल्या भार्येला द्यावेंस ह्मणजे त्यापासून पुत्र होईल यांत संशय नाहीं ॥ ३५ ॥ असें देवीचें भाषण श्रवण करून

प्राप्नोमि चोद्धरिष्यामि पितरो मम घोरगाः ॥ ॥ देव्युवाच ॥ मत्पार्श्वे वर्तमानस्य नाभावारुह्य शुंडिनः ॥ ३४ ॥ तत्पार्श्ववर्तिचूतस्य गृहीत्वा फलमद्भुतम् ॥ पत्न्यै देयं ततः पुत्रो भविष्यति न संशयः ॥३५॥ इति देवीवचः श्रुत्वा गत्वा तत्पार्श्व एवच ॥ नाभिं गजमुखस्याथारुह्य जग्राह मोहतः ॥ फलान्युत्तीर्य च ततः फलमेकं ददर्श सः ॥ ३६ ॥

तिच्या पार्श्वभागीं जाऊन गणपतीच्या नाभीवर चढून देवीच्या आज्ञेप्रमाणें एक फल घ्यावयाचें तें सोडून त्यानें मोहानें बहुत फळें घेतलीं, परंतु खालीं उतरून पाहतो तों एकच फळ त्यानें आपणाजवळ पाहिलें ॥ ३६ ॥

अशीं पुनः पुनः पुष्कळ फळें घेऊन खालीं आला, परंतु प्रत्येक वेळीं पाहतो तों एकच फळ आपणापाशीं आहे असें त्याच्या दृष्टीस पडे. नंतर वारंवार चढण्याच्या त्रासानें गणपति क्षुब्ध होऊन त्यानें धर्मपालास शाप दिला कीं ॥ ३७ ॥ तुझ्या पुत्राला सोळावें वर्ष लागलें कीं सर्प दंश करील. हें ऐकून त्याकालीं धर्मपाल तें फळ उत्तम प्रकारें वस्त्रांत बांधून घरीं

एवं पुनः पुनः कुर्वन् फलमेकं ददर्श सः ॥ क्षुब्धो गणपतिश्चाथ धर्मपालाय शप्तवान् ॥ ३७ ॥ षोडशे वत्सरे प्राप्ते अहिः पुत्रं दशिष्यति ॥ धर्मपालः फलं सम्यक् वस्त्रे बध्वाऽगमद्गृहम् ॥ ३८ ॥ फलं पत्न्यै ददौ सापि भक्षयित्वा पतिव्रता ॥ गर्भं सा धारयामास पत्या सह सुसंगता ॥ ३९ ॥ संपूर्णे नवमे मासे प्रासूत सुतमुत्तमम् ॥ जातकर्म चकारास्य पिता संतुष्टमानसः ॥ ४० ॥

आला ॥ ३८ ॥ आणि तें फळ भार्येला दिलें व त्या महापतिव्रतेनें तें भक्षण केलें. पुढें थोड्या कालांत ती स्त्री पतीशीं रममाण होऊन गर्भ धारण करती झाली. ॥ ३९ ॥ पुढें क्रमाक्रमानें नऊ महिने पूर्ण झाल्यावर ती उत्तम पुत्राला प्रसवली. त्या वेळीं त्याचा पिता धर्मपाल मनांत मोठा संतोष पावून त्यानें त्या पुत्राचें जातकर्म केलें ॥ ४० ॥

व सहाव्या दिवशीं षष्ठीपूजन केलें. नंतर बारावा दिवस प्राप्त झाला तेव्हां त्याचें शिव असें नामकरण करून त्यास शिव या नांवानें हाक मारूं लागला ॥ ४१ ॥ सहाव्या महिन्याला त्यानें पुत्राला अद्भुत आश्चर्यकारक संस्कारयुक्त अन्नप्राशन करविलें. तिसरे वर्षी चूडाकर्म ( चौल ) केलें. हे धर्मा, आठवे वर्षीं मुलाचें सर्वोत्कृष्ट रीतीनें उपनयन ( मुंज )

षष्ठीपूजां चकारास्य षष्ठे तु दिवसे ततः ॥ द्वादशेऽहनि संप्राप्ते शिवनाम्ना जुहाव तम् ॥४१॥ षष्ठे मासि चकारासावन्नप्राशनमद्भुतम् ॥ तृतीये वत्सरे चूडामष्टमेऽब्दे ह्यनुत्तमम् ॥ कृत्वोपनयनं पार्थ विप्रोऽभूत्तुष्टमानसः ॥ ४२ ॥ दशमे वत्सरे प्राप्तेऽब्रवीद्भार्या पतिव्रता ॥ ॥ भार्योवाच ॥ बालकस्य विवाहोऽपि कर्तव्यः सुमुहूर्तके ॥ ४३ ॥

केलें आणि तो धर्मपाल अंतःकरणांत संतोष पावला ॥ ४२ ॥ पुढें त्या मुलाला दहावें वर्ष लागलें असतां त्याची महापतिव्रता स्त्री पतीला ह्मणाली, हे नाथ, सुमुहूर्तावर या बालकाचा विवाहही करावात ॥ ४३ ॥

त्या वेळीं धर्मपाल ह्मणाला कीं, मीं पूर्वीं या बालकास काशीयात्रा करून आणण्याचा संकल्प केला आहे. मुलगा ती यात्रा करून येऊं द्या व नंतर त्याचा विवाह करूं. ॥४४॥ असें बोलून धर्मपालानें त्या पुत्राला शालका( मेहुण्या )समागमें यात्रेला पाठविला. तेव्हां तो

धर्मपाल उवाच ॥ मया संकल्पितं काश्यां गमनं बालकस्य तत् ॥ कृत्वा समायातु ततो विवाहोऽस्य भविष्यति ॥ ४४ ॥ पुत्रोऽसौ प्रेषितस्तेन शालकेन समन्वितः ॥ वाराणस्यां प्रस्थितोऽसौ गृहीत्वा बहुलं धनम् ॥ ४५ ॥ कुर्वंतौ पथि सद्धर्मं प्रतिष्ठापुरमीयतुः ॥ क्रीडंत्यः कन्यका दृष्टास्तत्र देशे मनोरमे ॥ ४६ ॥ ॥ ॥

शालक विपुल धन घेऊन काशीयात्रेला निघाला ॥ ४५ ॥ पुढें ते दोघे मामाभाचे मार्गांत नानाप्रकारें धर्माचरण करीत प्रतिष्ठानपुरास ( पैठणास ) आले. तों तेथें एका रमणीय स्थलीं कांहीं कन्या क्रीडा करीत आहेत असें त्यांनीं पाहिलें ॥ ४६ ॥

त्या कन्यांच्या मेळ्यांत गौरवर्ण अशी सुशीला नांवाची एक कन्या होती. तिच्या एका मैत्रिणीनें तिच्याशीं मोठा कलह केला ॥ ४७ ॥ आणि हे रंडे, हे अभाग्ये, अशा शिव्या पुनः पुनः सुशीलेला दिल्या, त्या ऐकून सुशीला ह्मणाली, हे शुभमुखि सखि, तूं मला व्यर्थ

तासां समाजे गौरांगी सुशीला नाम कन्यका ॥ तया सह सखी काचिच्चकार कलहं भृशम् ॥ ४७ ॥ गालनं च ददौ तस्यै रंडेऽभाग्ये मुहुर्मुहुः ॥ ॥ सुशीलोवाच ॥ सखि त्वया गालनं मे व्यर्थं दत्तं शुभानने ॥ ४८ ॥ जनन्या मे मानवत्याश्चास्ति गौरीव्रतं शुभम् ॥ तस्य प्रसादात्सकलाः संबंधिन्यः प्रियाः स्त्रियः ॥ ४९ ॥ ॥

रंडे वगैरे अभद्र शिव्या दिल्यास ॥ ४८ ॥ कारण, माझ्या मानवती नांवाच्या मातुश्रीला शुभकारक मंगलागौरीचें व्रत आहे. त्या व्रताच्या प्रभावानें आमच्या आप्तसंबंधी प्रिय सर्व स्त्रिया ॥ ४९ ॥

जन्मपर्यंत सौभाग्यवतीच राहिल्या तेव्हां त्या मानवतीची मी प्रत्यक्ष कन्या असल्यामुळें आजन्म सौभाग्यवतीच राहीन हें काय पुनः सांगावें ? हे सुंदरि, त्या श्रेष्ठ मंगलागौरी-व्रताचा किंचित् प्रताप सांगतें ॥ ५० ॥ तो असा कीं, जेथें मंगलागौरीच्या पूजनांतही धूप दीप लावले जातात त्या स्थलीं तावन्मात्रानेंच सुख होतें. असें त्या कन्येच्या मुखां-

> आजन्माऽविधवा जाताः किं पुनः कन्यका ध्रुवम् ॥ वक्ष्ये तस्य प्रभावं किं व्रतराजस्य भामिनि ॥ ५० ॥ पूजने धूपदीपोयं यत्र तत्र सुखं भवेत् ॥ इति श्रुत्वा ततो वाक्यं विस्मयोत्फुल्ललोचनः ॥ ५१ ॥ मातुलश्चिंतयामास बालकस्य· प्रियं ततः ॥ शतं जीवो भवेदेष एतद्धस्ताक्षता यदि ॥ पतंत्यमुष्य शिरसि इति भाव्य पुनः पुनः ॥ ५२ ॥

तील भाषण ऐकून विस्मयानें प्रफुल्लित नेत्र झालेला ॥ ५१ ॥ त्या बालकाचा मामा त्या भाच्याचें कल्याण होण्याविषयीं चिंतन करूं लागला. नंतर तो मनांत विचार करतो कीं, या मुलीच्या हातच्या अक्षता जर या बालकाच्या मस्तकावर पडतील तर हा मुलगा खरोखर शंभर वर्षें वांचेल असें वारंवार मनांत आणून ॥ ५२ ॥

तो मातुल विस्मयानें प्रफुल्लित नयन होऊन त्या सुशीला नामक कन्येपाशींच पाहूं लागला. आणि सुशीला स्वगृहीं जाण्यासाठीं निघाली तों तिच्या मागें ते दोघे मामाभाचे निघाले॥५३॥ नंतर ती गौरांगी सुशीला आपल्या घरीं गेली, आणि ते मामाभाचे तिच्या घराजवळ उत्तम तळ्यावरील रमणीय प्रदेशांत चांगला आश्रम पाहून राहिले॥५४॥पुढें सुशीलेचा विवाहकाल प्राप्त

सुशीलामेव पश्यन्स विस्मयोत्फुल्ललोचनः॥सुशीला प्रस्थिता गेहे तदनुप्रस्थितावुभौ ॥५३॥स्वगृहं प्राप गौरागी निकटे तद्गृहस्य तौ॥सत्तडागे रम्यदेशे वासं चक्रतुरादरात् ॥ ५४ ॥ विवाहकाले संप्राप्ते सुशीलाजनको हरिः ॥ विवाहोद्योगवान् जातो विचचार हरं वरम् ॥ ५५ ॥ असमर्थं हरं दृष्ट्वा तन्मातापितरावुभौ॥ययाचतुः शिवं बध्वांजली विनययुक्तकौ॥५६॥

झाला असतां तिचा पिता हरि तिचें लग्न करण्याची योजना करूं लागला, आणि जवळच राहणारा हर नांवाचा एक वर त्यानें पाहिला ॥५५॥ त्या वेळीं तो हर लग्न करण्याला अशक्त आहे असें पाहून त्या हराचे मातापितर उभयतां मोठ्या नम्रतेनें हात जोडून त्या यात्रेकरितां आलेल्या मातुलापाशीं येऊन हा तुमचा शिव नांवाचा भाचा आम्हांला द्या अशी याचना

करूं लागले ॥ ५६ ॥ ती अशी कीं, येथें हरीच्या सुशीला नांवाच्या मुलीशीं आमच्या मुलाचा विवाहसंस्कार उपस्थित झाला आहे, परंतु आमचा मुलगा तर यावेळीं लग्नाला अशक्त दिसतो ॥ ५७ ॥ याकरितां हे उदार मामा, तुह्मी आपला शरीरसंपत्तिमान् शिव-नांवाचा भाचा लग्नसमयीं जरासा आह्मांला द्या. लग्नोत्साह उरकल्यावर आह्मी तुमचा

॥ वरपितरावूचतुः ॥ उपस्थितो विवाहो नौ पुत्रस्य शुभया हरेः॥ सुशी-लया कन्ययायमसमर्थश्च दृश्यते ॥ ५७ ॥ अतो देयः शिवः श्रीमान् लग्नकाले त्वया विभो ॥ लग्नं भविष्यति ततो देयोऽस्माभिः शिवस्त-व ॥ ५८ ॥ ॥ मातुल उवाच ॥ अवश्यं लग्नकालेऽसौ शिवो ग्राह्यः प्रियंवदः ॥ ततो मुहूर्ते संप्राप्ते विवाहमकरोच्छिवः ॥ ५९ ॥ ॥

शिव तुह्माला देऊं ॥ ५८ ॥ हें ऐकून मातुल ह्मणतो, महाराज, हा मधुर भाषण करणारा शिव तुह्मी लग्नकालीं अवश्य घ्यावा. असा करार झाल्यावर पुढें विवाहमुहूर्त प्राप्त झाला असतां सुमुहूर्तीं त्या सुशीलेचें पाणिग्रहण शिवानें केलें ॥ ५९ ॥

आणि त्या विवाहादिवशीं रात्रौ सुशीलेसह मधुरभाषी अशा शिवानें तेथेंच निद्रा केली. त्या रात्रीं ती साध्वी तेजःपुंज मंगलागौरी देवी सुशीलेच्या मातोश्रीच्या रूपानें येऊन सुशीलेला हितकारक वचन बोलली ॥ ६० ॥ तें असें कीं, गौरी ह्मणते, हे गौरांगि सुशीले, तुझ्या पतीला दंश करण्यासाठीं मोठा भयंकर भुजंग आला आहे, याकरितां लवकर ऊठ

तत्रैव शयनं चक्रे ससुशीलः प्रियंवदः ॥ स्वप्ने सा मंगलागौरी मातृरूपेण भास्वता ॥ सुशीलामवदत्साध्वी हितं वचनमेव च ॥ ६० ॥ ॥ गौर्युवाच ॥ सुशीले तव गौरांगि भर्तुर्दंशार्थमागतः ॥ महान् भुजंग उत्तिष्ठ दुग्धं स्थापय तत्पुरः ॥ ६१ ॥ घटं च स्थापयाशु त्वं तन्मध्ये स गमिष्यति ॥ कूर्पासमंगान्निष्कास्य बंधनीयस्त्वया घटः ॥ ६२ ॥ ॥

आणि त्या सर्पापुढें दूध ठेव ॥ ६१ ॥ आणि त्या दुधाजवळ लागलाच एक कलश ठेव ह्मणजे तो भुजंग दूध प्राशन करून त्या कलशांत जाईल. नंतर तूं आपल्या अंगांतील चोळी काढून त्या चोळीनें त्या कलशाच्या तोंडाला वांध ॥ ६२ ॥

आणि प्रातःकाळीं उठून तूं तो तोंड बांधलेला उत्तम कलश आपल्या आईला वायन दे. असें गौरीचें भाषण ऐकून सुशीला तत्क्षणीं उठली ॥ ६३ ॥ तों पुढें श्वासोच्छ्वास टाकीत आहे असा महाभयंकर भला मोठा कृष्णसर्प सुशीलेनें पाहिला, तेव्हां गौरीच्या आज्ञेप्रमाणें सर्व तिणें केलें व ती पुनः निजली. नंतर ॥ ६४ ॥ तिचा पति शिव जवळच झोंप-

प्रातरुत्थाय देहि त्वं मात्रे वायनकं शुभम् ॥ इति गौरीवचः श्रुत्वा
सुशीला क्षणमुत्थिता ॥ ६३ ॥ ददर्शाग्रे निःश्वसंतं कृष्णसर्पं महाभयम् ॥
ततश्चकार गौर्युक्तं प्रवृत्ता निद्रितुं ततः ॥ ६४ ॥ उवाच वर आसन्नः
क्षुल्लग्ना महती मम ॥ भक्षणायाशु देहि त्वं लड्डुकादिकमुत्तमम् ॥ ६५ ॥
श्रुत्वेति वाक्यं पात्रे सा ददौ लड्डुकमुत्तमम् ॥ भक्षयित्वा शिवो हैमे
तस्मिन्पात्रेंगुलीयकम् ॥ ६६ ॥ ॥ ॥ ॥

लेला होता तो जागा होऊन ह्मणाला कीं, मला फार क्षुधा लागली आहे तरी मला खाण्यासाठीं लाडू आदिकरून कांहीं उत्तम पदार्थ दे ॥ ६५ ॥ असें पतीचें भाषण ऐकून सुशीलेनें उत्तम लाडू सुवर्णपात्रांत घालून दिला तो खाऊन त्या सुवर्णपात्रांत त्यानें आपली

आंगठी घालून सुशीलेला दिली ॥ ६६ ॥ आणि सुशीलेनें दिलेलें तें सुवर्णपात्र शिवानें खुणेसाठीं ह्मणून आपल्यापाशीं गुप्तस्थानीं ठेवलें. आणि तो सर्व कर्मांत चतुर शिव त्या स्थलींच सुखानें निजला ॥ ६७ ॥ पुढें प्रातःकाल होतांच शिव आपले बिऱ्हाडीं आला. इकडे सुशीलेनें देवीच्या आज्ञेप्रमाणें स्नान करून शुचिर्भूत होऊन आपल्या

दत्त्वा तत्स्थापयामास स्थले गुप्ते शुभाननः ॥ सुखेन शयनं चक्रे पृथिव्यां सर्वकोविदः ॥ ६७ ॥ ततः प्रभातसमये शिव आगाद् गृहं स्वकम् ॥ स्नानशुद्धा सुशीला सा मात्रे वायनकं ददौ ॥ ६८ ॥ माता ददर्श तन्मध्ये मुक्ताहारमनुत्तमम् ॥ ददौ प्रियायै कन्यायै सहसा तुष्टमानसा ॥ ६९ ॥ ॥ ॥ ॥

मातेला रात्रीं तोंड बांधलेला सर्पाचा कलश तोच तिणें उत्तम वायन दिलें ॥ ६८ ॥ तों त्या कलशांत सर्वोत्कृष्ट मोत्यांचा हार त्या मातेच्या दृष्टीस पडला. तत्काल ती मनांत अत्यंत संतुष्ट झाली व तिनें तो हार आपल्या आवडत्या सुशीलेला दिला. ॥ ६९ ॥

नंतर दुसरे दिवशीं विवाहकौतुकानें वधूवरें खेळविण्याचा वेळ येतांच पूर्वीं ज्या मुलास ती सुशीला देण्याचा संकेत होऊन गुप्त रीतीनें त्याच्या ठिकाणीं शिव येऊन लग्न झालें तो हर नांवाचा मुलगा सुशीलेच्या मंडपांत आला. तो येतांच माता त्या सुशीलेला क्रीडार्थ बोलावूं लागली. सुशीलेनें पाहिलें तों हा आपला पाणिग्रहणकर्ता वर नव्हे. तेव्हां ती

क्रीडाकाले सुसंप्राप्ते हर आगात्तु मंडपे ॥ आदेशयत्सुशीलां तां क्रीडार्थं जननी ततः ॥ ७० ॥ ॥ सुशीलोवाच ॥ नायं वरो मे जननि येन पाणिग्रहः कृतः ॥ अनेन साकं मनसा क्रीडनेच्छा तथा न मे ॥ ७१ ॥ इति श्रुत्वा समाक्रांतौ चिंतया पितरौ ततः ॥ अन्नदानमुपायं च विचेरतुरिति द्रुतम् ॥ ७२ ॥ ॥ ॥

आपल्या मातेला ह्मणाली ॥ ७० ॥ हे जननि, ज्यानें माझें पाणिग्रहण केलें तो वर हा नसल्यामुळें हा माझा पति नव्हे. यास्तव याच्या सहवर्तमान क्रीडा करण्याविषयीं माझ्या मनाची इच्छा होत नाहीं. ॥ ७१ ॥ असें कन्येचें भाषण ऐकून तिचे मातापितर अत्यंत चिंताक्रांत झाले आणि त्यांनीं आपल्या जांवयाचा शोध लागण्यासाठीं ब्राह्मणसंतर्पण-

निमित्तानें अतिथिअभ्यागताला अन्नदान करणें हाच उपाय योजला ॥ ७२ ॥ आणि त्या दिवसापासून सुशीलेचे मातापितर पुराणोक्त विधीनें नित्य अन्नदान करूं लागले. त्या सत्रांत अशी व्यवस्था केली होती कीं ती सुशीला आपल्या हातांत ती मुद्रिका घालून अतिथींचें पादप्रक्षालन करूं लागली. ॥ ७३ ॥ आणि तिची माता वरून उदक घालूं

तदारभ्य चक्रतुस्तौ पुराणोक्तविधानतः ॥ सुशीला पादयोश्चक्रे क्षालनं मुद्रिकान्विता ॥ ७३ ॥ जलधारां ददौ माता चंदनं पुत्रको हरेः ॥ हरिर्ददौ च तांबूलं बुभुजुस्तत्र मानवाः ॥ ७४ ॥ इति रीत्यान्नदानं तत्प्रवृत्तं भिक्षुसौख्यदम् ॥ तावुभौ प्रस्थितौ काश्यां प्राप्तौ काशीं सुखप्रदाम् ॥ ७५ ॥ ॥ ॥ ॥

लागली. हरीचा पुत्र गंध देत असे व हरि स्वतः तांबूल देऊं लागला. अशी सुरेख व्यवस्था पाहून तेथें पुष्कळ अतिथि येऊन भोजन करूं लागले ॥७४॥ याप्रमाणें अतिथीला सौख्य देणारें अन्नदान चालू झालें. इकडे ते दोघे मामाभाचे काशीयात्रेस निघालेले असे ते सुखदायक काशींत येऊन पोंचले ॥ ७५ ॥

तेव्हां त्यांनीं भागीरथीच्या निर्मल उदकांत भक्तिपूर्वक स्नान केलें आणि नंतर ते दोघे तेथून स्वर्गद्वारच्या यात्रेला जातांना मार्गानें उत्तम धर्म करीत चालले ॥ ७६ ॥ ते असे कीं; घरोघरीं भिक्षुकांला पीतांबर व वस्त्रें देत चालले. तेव्हां ते भिक्षुक ब्राह्मण शिवाला आशीर्वाद देऊं लागले कीं, हा मुलगा चिरंजीव होईल ॥ ७७ ॥ पुढें ती यात्रा करून पुनः

निर्मलांभसि गंगायाः स्नानं चक्रतुरादरात् ॥ स्वर्गद्वारं प्रस्थितौ तौ कुर्वंतौ धर्ममुत्तमम् ॥ ७६ ॥ पीतांबराणि ददतुर्भिक्षुकाणां गृहेगृहे ॥ आशिषश्च ददुस्तस्मै चिरंजीवो भवेदिति ॥ ७७ ॥ विश्वेश्वरं समायातौ नत्वा स्तुत्वा पुनःपुनः ॥ स्वयं गृहं प्रस्थितौ तौ शिवो मार्गे द्रुतं वदत् ॥ ७८ ॥ ॥ ॥ ॥

काशींत येऊन पुनः पुनः विश्वेश्वराला नमस्कार करून त्यांनीं त्याची स्तुती केली. याप्रमाणें यात्रा उरकून ते उभयतां आपले घरीं जाण्यासाठीं निघाले, तों मार्गांत शिव मोठ्या त्वरेनें ह्मणाला ॥ ७८ ॥

मामा, आज माझ्या शरीरांत बरेंच अस्वास्थ्य ( दुःख ) उत्पन्न झालें आहे असें भासतें, असें ह्मणतो एवढ्यांत त्याच्या प्राणाकर्षणार्थ यमदूत प्राप्त झाले ॥ ७९ ॥ त्या वेळीं मंगलागौरी ही त्याच्या संरक्षणार्थ आली, तेव्हां तिचें व यमदूतांचें मोठें भयंकर युद्ध झालें,

॥ शिव उवाच ॥ काये मे किंचिदस्वास्थ्यं मातुल प्रतिभाति हि ॥ ततः प्राणोत्क्रमे तस्य यमदूता उपस्थिताः ॥७९॥ मंगलागौरिका चापि तेषां युद्धमभून्महत् ॥ जित्वा तान्मंगला प्राणान् ददौ तस्मै शिवाय च ॥ ८० ॥ शिवोऽकस्मादुत्थितोऽसौ मातुलं प्रत्युवाच ह ॥ स्वप्ने युद्धं मया दृष्टं मंगलायमदूतयोः ॥ ८१ ॥ ॥ ॥

त्या युद्धांत मंगलागौरीनें यमदूतांला जिंकून त्या शिवाला प्राण दिले ॥ ८० ॥ नंतर शिव पडलेला होता तो एकाएकीं उठला व मामाला ह्मणाला कीं, मी आज स्वप्नांत मंगलागौरी व यमदूत यांचें भयंकर युद्ध पाहिलें ॥ ८१ ॥

त्यांत मंगलागौरीनें यमदूतांला जिंकलें असें पाहून मी जागृत झालों. हें शिवाचें भाषण ऐकून मामा ह्मणाला, हे शिवा, जें झालें तें झालें, त्याचें स्मरण तूं पुनः करूं नको ॥ ८२ ॥ आतां आपण तुझ्या मातापितरांचें दर्शन करण्याविषयीं उत्कंठित आहों त्यापेक्षां आपल्या

जितास्ते मंगलागौर्या ततोऽहं शयनच्युतः ॥ ॥ मातुल उवाच ॥
यज्जातं शिव तज्जातं न स्मर्तव्यं त्वया पुनः ॥ ८२ ॥ गच्छाव आवां
नगरे पितरौ द्रष्टुमुत्सुकौ ॥ प्रस्थितौ तौ ततस्तस्मात् प्रतिष्ठापुरमा-
पतुः ॥ ८३ ॥ रम्ये तडागे तत्रैतौ पाकारंभं विचक्रतुः ॥ दृष्टौ तौ
हरिदासीभिर्धैर्यौदार्यधरौ शुभौ ॥ ८४ ॥ ॥

नगरांत जाऊं. असें बोलून ते तेथून निघाले व पैठणांत पुनः आले ॥ ८३ ॥ आणि तेथें पूर्वींच्या रमणीय सरोवरावर ते दोघे राहून स्वयंपाकास आरंभ करूं लागले, त्या वेळीं हरीच्या दासींनीं ते दोघेही श्रेष्ठ धैर्य व औदार्य यांनीं संपन्न असे पाहिले ॥ ८४ ॥

तेव्हां त्यांला हरीच्या दासी ह्मणतात कीं, अहो पांथ हो, एथून समीपभागीं हरीच्या घरीं अन्नसत्र चाललें आहे तेथें आपण चलावें. तें ऐकून ते दोघे ह्मणाले कीं, दासी हो, आह्मी यात्रा करणारे आहों. याकरतां आह्मी कोठेंही कोणाच्या घरीं जात नाहीं. ॥ ८५ ॥ असें त्यांचें भाषण ऐकून दासी आपल्या घरीं गेल्या आणि आपल्या धन्याजवळ मोठ्या

दास्य ऊचुः ॥ ॥ अन्नदानं हरेर्गेहे प्रवृत्तं तत्र गम्यताम् ॥ ॥ उभावूचतुः ॥ भो दास्यो यात्रिकावावां गच्छावो न क्वचिद् गृहे ॥ ८५ ॥ इति श्रुत्वा तयोर्वाक्यं दास्यो जग्मुः स्वकं गृहम् ॥ स्वस्वामिनिकटे वाक्यमवदन्सादरं तदा ॥ ८६ ॥ सर्वं दासीवचः श्रुत्वा तदर्थं प्रभुरादरात् ॥ प्रेषयामास हस्त्यादि रत्नवस्त्राणि भूरिशः ॥ ८७ ॥ ॥

आदरानें तें वर्तमान सांगूं लागल्या. त्या कालीं ॥ ८६ ॥ तें सर्व दासीचें भाषण ऐकून मोठ्या सत्कारानें त्यांस आणण्यासाठीं त्या यजमानानें बहुत गज, अश्व, इत्यादि यानें आणि रत्नें, वस्त्रेंही पाठविलीं ॥ ८७ ॥

तेव्हां तें बहु सन्मानानें आलेलें बोलावणें पाहून ते पांथ आश्चर्यचकित होत्साते तत्काल हरीच्या घरीं आले, त्यावेळीं हरी हा त्या उभयतां पांथांतील मातुलाची पूजा करून त्याच्या शिव नामक भाच्याची पूजा करण्यासाठीं आला ॥ ८८ ॥ तेव्हां ती सत्रव्यवस्थापक हरीची कन्या त्या शिवाचें आपल्या हातानें पादप्रक्षालन करूं लागली त्यावेळीं त्याला पाह-

तद्दृष्ट्वा विस्मितौ तावागच्छतुश्च हरेर्गृहम् ॥ हरिर्मातुलमभ्यर्च्य शिवं पूजितुमागतः ॥ ८८ ॥ क्षालयंती च सा कन्या चरणौ तस्य सत्रपा ॥ अभूद्वरो मेऽयमिति जननीं प्रत्युवाच ह ॥ ८९ ॥ हरिः प्रपच्छ साश्चर्यं शिवं मंगलदर्शनम् ॥ ॥ हरिरुवाच ॥ किंचिच्चिह्नं तवास्त्यत्र ब्रूहि मे वरदर्शन ॥ ९० ॥ ॥ ॥

तांच लज्जित होऊन मातेला ह्मणाली कीं, आई, हा माझा पति असावा ॥ ८९ ॥ तेव्हां हरि आश्चर्यानें त्या मंगलकारक दर्शनस्वरूप शिवाला प्रश्न करितो कीं, हे शिवा, तूं आमच्या मुलीचा पति असशील असें अनुमान वाटतें, पण अशाबद्दल तुझ्यापाशीं कांहीं खाणखूण आहे काय? असेल तर सांग ॥ ९० ॥

तेव्हां शिव ह्मणाला कीं, अल्पस्वल्प कांहीं खूण आहे. असें बोलून तो आपल्या राहिलेल्या घरीं आला आणि तेथून आंगठी ठेवलेलें पात्र आणून मोठ्या आदरानें दाखविलें ॥ ९१ ॥ त्या वेळीं तें पात्र पाहून हरीनें ती सुशीला कन्या त्याच्या स्वाधीन केली. आणि बहुत

॥ ॥ शिव उवाच ॥ ममेदं चिह्नमस्तीह इत्युक्त्वा गृहमागतः ॥ तत आनीय तत्पात्रं दर्शयामास सादरम् ॥ ९१ ॥ तत्पात्रं च हरिर्दृष्ट्वा कन्यादानं चकार सः ॥ ददौ रत्नानि वस्त्राणि सुवर्णानि बहून्यपि ॥ ९२ ॥ तामादाय प्रस्थितौ तौ ददतो बहुलं धनम् ॥ श्रावणे मासि संप्राप्ते व्रतं भौमे चकार सा ॥ ९३ ॥ ॥ ॥

रत्नें, वस्त्रें, सुवर्णें त्या जामाताला दिलीं. ॥ ९२ ॥ तेव्हां त्या कन्येला घेऊन ते दोघेही तेथून निघाले व निघतांना ब्राह्मणांला बहुत द्रव्यें वांटलीं. नंतर मार्गांत श्रावणमास प्राप्त झाला असतां त्या सुशीलेनें मंगळवारीं मंगलागौरीचें व्रत केलें ॥ ९३ ॥

आणि उत्तम भोजन करून ते सर्व तेथून निघून चार कोसपर्यंत पुढें गेले. तेव्हां सुशीला ह्मणाली कीं, मी मंगलागौरीला आरती करून तिचें विसर्जन करीन ॥ ९४ ॥ आणि नंतर आपण मातापितरांस आदरपूर्वक भेटण्यासाठीं जाऊं, असें तिनें बोलतांच जेथें गौरीचें

भुक्त्वा सर्वे प्रस्थितास्ते योजनं जग्मुरुत्तमाः ॥ ॥ सुशीलोवाच ॥ गौरीविसर्जनं चापि दीपमानं करोमि च ॥९४॥ ततो गंतव्यमस्माभिः पितरौ द्रष्टुमादरात् ॥ इत्युक्त्वा आगतास्तत्र गौर्या आवाहनं कृतम् ॥ ९५ ॥ ददृशुस्तत्र सौवर्णं देवालयमनुत्तमम् ॥ गौरीविसर्जनं दीपमानं सा च व्यचीकरत् ॥ ९६ ॥ ॥ ॥ ॥

आवाहन केलें होतें त्या जागीं ते आले ॥ ९५ ॥ तों त्यानीं गौरीपूजनस्थळीं सुवर्णाचें उत्तम देवालय पाहिलें. नंतर त्या सुशीलेनें देवीला आरती करून तिचें विसर्जन केलें ॥ ९६ ॥

नंतर ते सर्व मातापितरांस भेटण्यासाठीं मोठ्या उत्कंठेनें तेथून निघाले, ते कुंडिन नगरासमीपच्या प्रदेशांत येतांच त्यांला पाहून तेथील लोक विस्मित होत्साते ॥ ९७ ॥ प्रियदर्शनाच्या योगानें उत्सुक होऊन धर्मपालास बोलूं लागले तें असें कीं, हे धर्मपाला,

ततः सर्वे प्रस्थितास्ते पितरौ द्रष्टुमुत्सुकाः ॥ कुंडिनासन्नदेशे तान् दृष्ट्वा विस्मयिनो जनाः ॥ ९७ ॥ अब्रुवंस्ते धर्मपालं सोत्कंठं प्रियदर्शनाः ॥ ॥ ॥ जना ऊचुः ॥ धर्मपालाद्य ते पुत्रः सभार्यः शालकस्तथा ॥९८॥ समायातो वयं दृष्ट्वा अधुनैव समागताः ॥ यावज्जनाऽवदंस्तत्र ताव-त्सोऽपि समागतः ॥ ९९ ॥ ॥ ॥ ॥ ॥

तुझा पुत्र भार्येसह आणि मेहुणा हे तिघेही आज ॥ ९८ ॥ नगरासमीप आले, कशा-वरून ह्मणशील तर आह्मी त्यास आतांच पाहून आलों, असें लोक जों बोलत आहेत एवढ्यांत तेही तेथें आले ॥ ९९ ॥

आणि त्या पितृभक्त पुत्रानें मातापितरांस अनेक नमस्कार केले. तसाच त्याच्या मातुलानेंही भगिनी व धर्मपाल यांस नमस्कार केला ॥ १०० ॥ तसीच सुशीलाही सासूसासऱ्यांस नमस्कार करून जवळ उभी राहिली. तेव्हां सासू ह्मणाली हे कमलनयने

नमस्कारांश्चकारासौ पितृभ्यां पितृवल्लभः ॥ मातुलोऽपि नतिं चक्रे भगिनीधर्मपालयोः ॥१००॥ सुशीला श्वशुरायापि श्वश्रूं नत्वा स्थिता तदा ॥ ॥ श्वश्रूरुवाच ॥ सुशीले तद्व्रतं ब्रूहि यद्व्रतस्य प्रभावतः ॥ आयुर्वृद्धिः शिशोर्मेऽपि जाता कमललोचने ॥१०१॥ ॥ सुशीलोवाच ॥ न जानेऽहं व्रतं श्वश्रू जाने मानवतीहरी ॥ श्वशुरं धर्मपालं च श्वश्रूं च भवतीं तथा ॥ १०२ ॥ ॥ ॥ ॥ ॥ ॥

सुशीले, तें व्रत सांग कीं, ज्या व्रताच्या प्रतापानें माझ्या पुत्राची आयुष्यवृद्धि झाली ॥ १०१ ॥ सुशीला ह्मणाली अहो सासुबाई, मी व्रत जाणत नाहीं तर केवळ मानवती व हरी या मातापितरांला जाणतें, श्वशुर धर्मपाल व आपण सासुबाई ॥ १०२ ॥

तशीच देवता मंगलागौरी व तुमचा पुत्र पति यांला मात्र मी जाणतें. याहून दुसरें मी कांहींच जाणत नाहीं. असें बोलून ती सुशीला अंतःकरणांत हर्षयुक्त होऊन भोजन करिती झाली ॥ १०३ ॥ श्रीकृष्ण ह्मणतात. हे धर्मा, हें असें मंगलागौरीचें व्रत अवैधव्य-कारक आहे ह्मणून स्त्रियांनीं सर्वदा करावें. युधिष्ठिर प्रश्न करितो. हे कृष्णा, या व्रताचें

मंगलादेवतां जाने वरं तु युवयोः सुतम् ॥ इत्युक्त्वा च सुशीला सा बुभुजे स्वांतहर्षिता ॥ १०३ ॥ ॥ कृष्ण उवाच ॥ तस्माद्व्रतमिदं धर्म स्त्रीभिः कार्यं सदैव तु ॥ ॥ युधिष्ठिर उवाच ॥ फलमस्य श्रुतं कृष्ण विधानं ब्रूहि केशव ॥१०४॥ ॥ श्रीकृष्ण उवाच ॥ श्रावणे मासि भौमेषु चतुर्षु व्रतमाचरेत् ॥ प्रातरुत्थाय सुस्नाता संकल्प्य व्रतमुत्तमम् ॥ १०५ ॥

फल श्रवण केलें. हे केशवा, आतां याचें विधान सांगा ॥ १०४ ॥ तेव्हां कृष्ण सांगतात. श्रावणमासीं चारी मंगळवारीं हें व्रत करावें, तें असें कीं, स्त्रियांनीं प्रातःकाळीं उठून मंगलस्नानपूर्वक या उत्तम व्रताचा संकल्प करून ॥ १०५ ॥

षोडशोपचारांनीं मंगलागौरीचें पूजन करावें. तसेंच सोळा दीपानीं निरांजन ( आरती ) करावी ॥ १०६ ॥ नंतर माता व इतर सुवासिनी यांस उत्तम वायनें द्यावीं. आणि नीरांजनाकरितां केलेले पिठाचे वगैरे दीप व अळणी अन्न भक्षण करावें ॥ १०७ ॥ नंतर दुसरे दिवशीं प्रातःकाळीं मंगलागौरीला आरती करून तिचें विसर्जन अशा क्रमानें व्रत

उपचारैः षोडशभिः पूजयेन्मंगला तथा ॥ नीराजनं ततः कुर्याद्दीपैः षोडशसंख्यया ॥ १०६ ॥ मात्रे सुवासिनीभ्यश्च देयं वायनमुत्तमम् ॥ भोक्तव्या दीपकाश्चापि अन्नं लवणवर्जितम् ॥१०७॥ विसर्जनं मंगलाया दीपमानं ततः क्रमात् ॥ पंचसंवत्सरेष्वेवं कर्तव्यं पतिमिच्छुभिः॥१०८॥
॥ ॥ इति श्रीभविष्योत्तरपुराणे मंगलागौरीव्रतोद्यापनकथा संपूर्णा ॥

करावें. असें हें व्रत आपल्या पतीला पूर्ण आयुष्य प्राप्त होण्याचीं इच्छा करणाऱ्या स्त्रियांनीं लग्नापासून पांच वर्षें करावें ॥ १०८ ॥ इति श्रीभविष्योत्तरपुराणे मंगलागौरीव्रतसार्थ-कथा समाप्त ॥

या पुस्तकाचें महाराष्ट्र सुबोध भाषांतर **वासुदेव लक्ष्मण शास्त्री पणशीकर** यांनीं तयार केलें तें मुंबईंत **तुकाराम जावजी** यांनीं आपल्या निर्णयसागर छापखान्यांत छापून प्रसिद्ध केलें.

**शके १८३५, सन १९१३.**



---

Published by Tukaram Javaji Proprietor N. S. Press, 23 Kolbhat Lane, Bombay.

Printed by R. Y. Shedge, at the Nirnaya Sagar Press, 23 Kolbhat Lane, Bombay,

